इति नामशतं दिव्यं वैष्णवं खलु पापहम्॥ १२
व्यासेन कथितं पूर्वं सर्वपापप्रणाशनम्।
यः पठेत् प्रातरुत्थाय स भवेद् वैष्णवो नरः॥ १३
सर्वपापविशुद्धात्मा विष्णुसायुज्यमाप्नुयात्।
चान्द्रायणसहस्राणि कन्यादानशतानि च॥ १४
गवां लक्षसहस्राणि मुक्तिभागी भवेन्नरः।
अश्वमेधायुतं पुण्यं फलं प्राप्नोति मानवः॥ १५

भगवान् विष्णुके ये सौ दिव्य नाम निश्चय ही पापोंका नाश करनेवाले हैं। व्यासजीने सर्वप्रथम इनका उपदेश दिया है। इसके पाठसे समस्त पापोंका नाश हो जाता है। जो प्रातःकाल उठकर इसका पाठ करेगा, वह मनुष्य भगवान् विष्णुका भक्त हो जायगा। उसके हृदयके सारे पाप धुल जायँगे और वह शुद्धचित्त होकर भगवान् विष्णुका सायुज्य प्राप्त कर लेगा। इसके पाठसे सहस्रों चान्द्रायणव्रत, सैकड़ों कन्यादानजनित पुण्य तथा सहस्रों लक्ष गोदानोंका फल पाकर मनुष्य मोक्षका भागी होता है; उसे दस हजार अश्वमेध-यज्ञोंका पुण्य फल प्राप्त होता है॥ १२—१५॥

॥ इति श्रीविष्णुशतनामस्तोत्रं सम्पूर्णम्॥

## वन्ध्यानां पुत्रोत्पत्त्यर्थं संतानगोपालमन्त्रविधिः

अथ वन्ध्यानां पुत्रोत्पत्त्यर्थं संतानगोपाल-विधानम्॥ मन्त्रसारे—आदौ शरीरशुद्ध्यर्थं कर्माधिकारार्थं जन्मान्तरीयसंततिप्रतिबन्धक-दुरदृष्टजनितदोषपरिहारार्थं कर्माधिकारसिद्ध्यर्थं द्वादशाब्दषडब्दत्र्यब्दसार्द्धाब्दादीनि यथा-शक्त्यनुसारेण प्रायश्चित्तानि दद्यात्—

''प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनम्।
कृत्वा शुद्धिं तु देहस्य ततः कर्माणि कारयेत्॥''

—इति नियमात्।

अर्धादिप्रायश्चित्तलक्षणं तु महार्णवादावुक्तम् ''त्रिंशद्भिश्च तथा गोभिरर्धं तु मुनिभिः स्मृतम्'' इत्यादिना द्रष्टव्यम्। उक्तविधानेन प्रायश्चित्ते कृते वन्ध्यात्वनिरासार्थं महार्णवोक्तं सुवर्ण-धेनुदानं तथा षोडशशूर्पसौभाग्यद्रव्यं वस्त्रालंकार-सहितयज्ञोपवीतदानं च विधेयम्। उक्तं च—

''वन्ध्यात्वस्य निरासार्थं धेनुं दद्याच्च हेमजाम्।
तथा यज्ञोपवीतं तु दद्याद्धेममयं शुभम्।
षोडशानि च शूर्पाणि फलयुक्तानि दापयेत्॥
एवं कृते विधानेन वन्ध्यत्वात् प्रतिमुच्यते।
सत्पुत्रं लभते नूनमेतत् कर्म प्रयोजयेत्॥''

—इति नियमात्।

*अथ प्रयोगः*—आचार्यहस्तेन देयमिति नियमात् तस्मादादौ आचार्यवरणं कार्यं ''सर्वमाचार्यः प्रतिजानीते'' इति नियमात्। तत्र धेनुमानमाह सूर्यार्णवे—

''धेनुं निष्कचतुष्कस्य तदर्द्धं स्यात्तदर्द्धकम्।
तदर्द्धस्य च वा तत्र चतुर्थांशेन वत्सकम्॥''

—इति हेमाद्रिवचनानुसारेण विदध्यात्। एवं यज्ञोपवीतमपि देयम्। सोमो धेनुमिति मन्त्रेण होमाचरणं कुर्यात्। तद्विशेषविधानं महार्णवादौ द्रष्टव्यम्। एवं पूर्वोक्तमादौ निर्वर्त्य प्रायश्चित्तोत्तरं पूर्वाणि दशस्नानानि कृत्वा तत्प्रोक्तानि गोदानानि दत्त्वा पञ्चगव्यं प्राश्य तद्दिने उपोषणं कार्यम्। अशक्तश्चेद्धविष्यान्नं भुञ्जीत। ततः सुदिने चन्द्रतारानुकूल्ये पुरुषनक्षत्रे संतानगोपालविधानं कार्यम्।

*अथ विधानम्।* पुरश्चरणस्य लक्षसंख्या नियमः, तत्रापि कलौ चतुर्गुणं कार्यं तदुक्तम् ''कलौ चतुर्गुणः प्रोक्तः पुरश्चरणके विधिः॥'' इति वचनात्। तत्रादौ ऋत्विग्वरणं तत्र मूलमन्त्रजपार्थमष्टौ ब्राह्मणान् वृणुयाच्चतुरो वा। तत्र सर्वकर्माधिकारार्थं शान्तं तद्विधिज्ञमाचार्यं वृणुयात्। ततस्तदङ्गत्वेन चतुर्विधवन्ध्यात्वदोष-

परिहारार्थं च लक्षसंख्याकपार्थिवलिङ्गपूजनं च शतचण्डीपाठं मन्युसूक्तजपं नवग्रहजपं रुद्राध्यायजपं हरिवंशश्रवणं च कुर्यात्। तत्र ऋत्विजः स्वशक्त्यनुसारेण जपं कुर्युरेवं मन्युसूक्तजपं लक्षसंख्याकं तदर्द्धं वा तदर्द्धं वा तदर्द्धं वा कुर्यात्। नित्यं तद्दशभिर्मन्त्रितदशघटैर्जलपूर्णैर्दम्पती स्नायाताम्।

'देवकीसुत गोविन्द' अङ्गुष्ठाभ्यां नमः। 'वासुदेव जगत्पते' तर्जनीभ्यां नमः। 'देहि मे तनयं कृष्ण' मध्यमाभ्यां नमः। 'त्वामहं शरणं गतः' अनामिकाभ्यां नमः। 'ॐ क्लीं देवकीसुत गोविन्द वासुदेव जगत्पते' कनिष्ठिकाभ्यां नमः। 'देहि मे तनयं कृष्ण त्वामहं शरणं गतः' करतलकरपृष्ठाभ्यां नमः। एवं हृदयादि न्यासः। एवं न्यासं विधाय मूलेन त्रिव्यापकं कुर्यात्।

*अथ ध्यानम्—*

शान्तं सम्मुखसन्निषण्णममलं रक्ताम्बुजे बालकं माणिक्योज्ज्वलमालभूषणलसत्संतप्तहेमद्युतिम्।
प्रेम्णालिंग्य मुहुर्मुहुः सुखवशात् सम्भावितं स्वात्मना ध्यायेत् पुत्रतया पुराणपुरुषं पुत्राभिलाषी पुमान्॥

—एवं ध्यात्वा यथोक्तजपं कुर्यात्।

जपान्ते दशांशहोमं कुर्यात्। तर्पणं ब्राह्मणभोजनं च सम्पाद्य दानान्तं कृत्वा कुण्डं पूजयित्वा पुनर्मण्डलदेवतानि सम्पूज्य (तत्र योनिकुण्डं मुख्यम्) एवं कुण्डमण्डपादि निर्वर्त्य गणेशादिलोकपालादिवास्तुयोगिनीनवग्रहमातृकाणां स्थापनं मूलदेवतास्थापनं मण्डलदेवतास्थापनं तोरणद्वारध्वजपताकानां स्थापनं कृत्वा तत्तन्मन्त्रैस्तत्तत्स्थाने सम्पूज्य कुण्डसंस्कारं कृत्वा अग्निं प्रतिष्ठाप्य दशांशेन हुत्वा तर्पणं ब्राह्मणभोजनं मार्जनं मण्डलदेवतास्थापनं लोकपालानां नवग्रहादिमण्डलचतुष्टयदेवतानां च यथाशक्त्या हेमप्रतिमाः कृत्वा मूलदेवताप्रतिमां च निष्काष्टकेन वा निष्कत्रयेण सम्पाद्य अग्न्युत्तारणं कृत्वा अधिवासनादि विसर्जनान्तं पूजयित्वा आचार्याय निवेद्य दक्षिणां दद्यात्।

शक्तश्चेत् कृष्णविग्रहः कर्तव्यः। पद्मोपरि निविष्टो बालकरूपेण सुवर्णनिष्काष्टकस्य सुवर्णादिनिर्मितकलशे देवतानां प्रतिकलशं स्थापयित्वा एकादशकलशांस्तदुपरि आच्छादनपात्राणि वस्त्रफलसंयुतानि संस्थाप्य कलशपूजाविधानं कृत्वा मही द्यौरिति भूमिं प्रार्थ्य तण्डुलादिधान्यराशिं कृत्वा कलशं संस्थाप्य आकलशेष्विति इमं मे गङ्गे इत्यादिना उदकं पूरयित्वा तन्मध्ये पञ्चनद्येत्यादि तीर्थोदकं दत्त्वा पञ्चरत्नानि निक्षिप्य पञ्चामृतं पञ्चगव्यं पञ्चपल्लवान् पञ्चत्वचः सप्तमृत्तिका फलानि हिरण्यं च तत्तन्मन्त्रैर्निधायाच्छाद्यासनं दत्त्वा भूमौ स्थापयेत्।

तासां प्रतिमानामग्न्युत्तारणं विधाय प्राणप्रतिष्ठां कुर्यात् तत्तन्नाम्ना पृथक्पृथक्प्राणान् संस्थाप्य इष्टदेवैः सह स्नानं कारयित्वा ततः पुरुषसूक्तादिनाम्नाऽऽवाहनाद्युपचारैः सम्पूज्य—

आगच्छ देव भगवञ्छ्रीगोपाल नमोऽस्तु ते।
मम संतानसिद्ध्यर्थं सान्निध्यं कुरु सर्वदा॥

—एवमावाहनादिषोडशोपचारैः सम्पूज्य तिलसर्पिः फलपुष्पनैवेद्यान्तं विधाय एवं नियमो द्रष्टव्यः। तिलघृतपायसेन हुत्वा देवस्य शयनार्थमान्दोलकं चामरं छत्रमादर्शं पादुकान्तं षोडशोपचारान्तपूजां विधाय पूर्णाहुतिं कृत्वा तर्पणमार्जनादि विधाय श्रेयःसम्पादनं सम्पाद्य आचार्यादिऋत्विग्भ्यो वस्त्रालङ्कारादिना संतोष्य आचार्याय मूर्तिदानं कृत्वा जापकेभ्यो दक्षिणां दत्त्वा दानपत्रे ब्राह्मणाय दक्षिणा देया—

देवतानां व्रतैर्युक्तं संतुष्टहृदयान्वितम्।
वेदाध्ययनसंयुक्तं सपत्नीकं सपुत्रकम्॥
सुगन्धवस्त्रमालाद्यैः कुण्डलैरङ्गुलीयकैः।
तस्मिन् संतानगोपालदानं भक्त्या समाचरेत्॥

*अथ दानमन्त्रः—*

करुणाकर देवेश नवनीताशन प्रिय।
देहि मे पुत्रसंतानं कुलवृद्धिकरं मम॥

—इति दत्त्वा सुवर्णदक्षिणां दद्यात्। आचार्याय द्विगुणां गोमिथुनं दत्त्वा संतोष्य ब्राह्मणान् भोजयित्वा आशिषो गृहीत्वा यथासुखं विहरेत्। एवं कृते पुत्रवान् भवति, गोपालः स्वयमेवावतरिष्यति।

अथ मन्त्रचन्द्रिकावचनम्। होमस्तु जीवपुत्रवृक्षस्य समिद्धिर्वा फलैः कार्यः। तदभावे तिलसर्पिषा पायसेन वा कार्यः। अत्र पार्थिवपूजनं तु एकोत्तरवृद्धिलक्षं पृथक्पृथक्कार्यं तदभावे लक्षादिविधानैः सहैकतन्त्रेण वा कार्यम्। तदुक्तं लिङ्गार्चनविधाने एकोत्तरविधाने तु पृथक्पृथक्पूजनं च कार्यं लक्षलिङ्गप्रकारे तु सहैकतन्त्रेण कारयेत्। लिङ्गविधाने होमे तु दशांशनियमो नास्ति किंतु यत्संख्याकानि लिङ्गानि पूजयेत्तावदेव तु होमयेत्॥ तदुक्तं मन्त्रमहोदधौ—'यत्संख्याके यजेल्लिङ्गं तत्संख्यं होममाचरेत्' इति लिङ्गार्चनदीपिकोक्तं कुर्यात्।

*आचार्यादिवरणप्रकारः*—देशकालौ संकीर्त्य अमुकगोत्रोत्पन्नोऽहममुकशर्माहमाचार्यत्वेन त्वामहं वृणे। तत आचार्यः—अमुकगोत्रोत्पन्नोऽहममुकशर्माहं वृतोऽस्मि करिष्यामीति प्रतिवचनम्। तं वासोऽलङ्कारादिभिः पूजयेत्। एवमृत्विजोऽपि पूजयेत्।

*अथ जपविधिः*॥ स्नात्वाऽऽचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य अमुकगोत्रस्य अमुकशर्मणो यजमानस्य धर्मपत्न्यां चिरञ्जीवशुभसंतानप्राप्त्यर्थं लक्षादिसंख्यान्तर्गतयथोक्तसंख्यां प्रारभ्यैतत्संख्यापर्यन्तं संतानगोपालमन्त्रस्य जपमहं करिष्ये॥ इति सङ्कल्प्य आसने उपविश्य भूशुद्धिं भूतशुद्धिं प्राणप्रतिष्ठामन्तर्मातृकाबहिर्मातृकान्यासांश्च कृत्वा तदुपरि षडङ्गानि कुर्यात्। यथा ॐ क्लां हृदि। ॐक्लीं शिरसि। ॐ क्लूं शिखायै। ॐ क्लैं कवचम्। ॐ क्लौं नेत्रम्। ॐ क्लः अस्त्रम्। एवं करन्यासादि विधाय। ॐ भूर्भुवः स्वरोमिति दिग्बन्धं कृत्वा मूलमन्त्रन्यासं च कुर्यात्। यथा क्लीं देवकीसुतसंतानगोपालस्यायुधध्यानम्—

शङ्खचक्रधरं देवं श्यामवर्णं चतुर्भुजम्।
सर्वाभरणसंदीप्तं पीतवासःसमन्वितम्॥
मयूरपिच्छसंयुक्तं विष्णुतेजोपबृंहितम्।
समर्पयन्तं विप्राय नष्टानानीय बालकान्॥
करुणामृतसम्पूर्णं चेष्टैकनिलयं त्वजम्॥

चतुर्भुजमित्यनेन गदाम्बुजे सूचिते। वामाद्यूर्ध्वयोराद्ये तदाद्यन्ययोरन्ये इत्यायुधध्यानम्॥

*स्त्रीभिस्तु*—स्वान्ते सम्मुखसन्निविष्टममले रक्ताम्बुजे बालकं माणिक्योज्ज्वलबालभूषणगणं संतप्तहेमद्युतिम्। प्रेम्णाऽऽलिंग्य मुहुर्मुहुः सुखवशात् संलालितं स्वात्मना पुत्रत्वेन विभावयेन्मुररिपुं पुत्रार्थिनी कामिनी॥ इति ध्यात्वा पूजादि विधाय मन्त्रो जप्यः।

॥ इति संतानगोपालमन्त्रानुष्ठानविधानपद्धतिः॥

॥ शुभम्भवतु ॥